**इयम् आकाशवाणी**

**सम्प्रति वार्ता**

**दिनाङ्कः- 23-11-2020** **सायम् - 06:20**

**कैबिनेट-साइक्लोन बैठक**

केन्द्रीय मन्त्रिमण्डलीय-सचिव: राजीव-गौबा: अद्य आसन्नप्राय- चक्रवात-स्थितिं समीक्षितुं राष्ट्रिय-आपत्प्रबन्धनसमिते: अध्यक्षतां व्यद्धात्। अस्मिन्नुपवेशने आन्ध्र-प्रदेश-तमिलनाडु-पौण्डुचेरी चेति राज्याणां मुख्य-सचिवा: अपि सहभागं कृतवन्त:, तै: विषयेऽस्मिन्। केन्द्रीय-मन्त्रिमण्डलीय: सचिस: संसूचित:। तै: आश्वासितम् कामपि अप्रिय-घटनाम् अवरोद्धुं सर्वा: संस्था: सन्ति करिबद्धा: इति। राज्याणां मुख्यसचिवै राष्ट्रिय-आपात् –प्रतिकार –बल समेत्स अन्याभि: संस्वाभि: सन्नद्ध-समन्वयनाय अपि संसूचितम्। भारतीय-ऋतुविज्ञानविभागस्य महानिदेशक: डॉ. मृत्युंजय महापात्रा –वर्य: वर्तमानस्थितिम् आलक्ष्य एकां प्रस्तुतिं प्राकाशयत। असौ समुल्लिखत् यत् सम्बन्धित राज्यै: साकं स्थिति: परामृश्यते। तेन स्पष्टीकृतं यत् समुपजातेन अनेन चक्रवातेनं आगामिषु त्रिषु दिवसेषु आन्ध्र-प्रदेश-पौण्डुचेरी-तमिलनाडु-चेति राज्याणां तटीय क्षेत्राणि प्रभावितानि भविष्यन्ति इति।

**टेनिस एटीपी सिंगल्स**

रूस देशीय: डेनियल मेदवेदेव इज्यसौ अपेरिकादेशीयं डोमिनिक थीम इत्येनं पराभूय एटीपी फाइनल्स इति टेनिस स्पर्धामालिकां स्वायतीकृतवान्। लंदन नगरे असौ थीम इत्येनं चत्वारि-षड्, सप्त-षड्, षड्-चत्वारि इति अन्तरालेन पराजयत्। असौ निकोले डेविडसन इत्यस्य अनन्तरं इदं स्पर्धाविजेतृषु अन्यतम:। एटीपी डबल्स टेनिस प्रतियोगितायां –नीदरलैण्डस्य वोस्ले कूलहॉक एवंच क्रोएशियाया: निकोला मेट्रिक्स इत्याभ्यां युगलाभ्यां गतरात्रौ एटीपी टूर टैनिस इति द्वन्द्वस्य स्पर्धा-जेयता अवाप्ता। अस्य युगलस्य इयं प्रथमोपलब्धि: वर्तते। ताभ्याम् आस्ट्रियाया: जर्गेन मेल्ज़र फ्रांसस्य एडवर्ड रोजर वैसेलिन इत्यनयो: युगलं षड्-द्वि, त्रीजि-षड्, दश-पंच इति अन्तरालेन पराजयत्।

**जावड़ेकर**

सूचना-प्रसारण मन्त्रिणा प्रकाश जावड़ेकरेणोक्तं यत् भारतस्य विदेशी मुद्रा भंडार: उन्नतस्तरे सम्प्राप्त:। तेन स्वीय ट्वीटालेखे उक्तं यत-भारतस्य विदेशी मुद्रा भंडार: गत षड् वर्षा वधौ प्राय: द्विगुणीभूय द्विसप्तत्यधिक पंच शतं अर्वुद डॉलरमित: संजात:। तेनोक्तं यत् सम्पूर्ण-विश्वं अभिनव-भारतं सम्मानितरूपेण विश्वासदृशा च अवलोयति।

**विदेश सचिव-नेपाल यात्रा**

विदेश-सचिव: हर्षवर्धनशृंगला: अस्य मासस्य षड्विशंति दिनांके नेपालदेशीयां आधिकारिक-यात्रां सम्पादयिष्यते। ध्यानास्पदं तथ्यमिदं यत् कार्यभारं-स्वीकरणानन्तरं विदेश-सचिवस्य इयं प्रथमा नेपाल-यात्रा वर्तते। विदेश-मन्त्रालयेन प्रोदितं यत् यात्रेयं उभौ देशौ अन्तरा नियमितरूपेण उच्च-स्तरीयां आदान-प्रदानपरम्परां आधृत्य वर्तते अपि च नेपाल देशं सर्वदा अस्माकं प्राथमिकतासु अन्यतमम् वर्तते। स्वीय द्विदिवसीय यात्रावधौ विदेशसचिव: हर्षवर्धन: शृंगला: नेपाल देशीयेन स्वीय-समकक्षेण साकं अपि च तत्रत्य प्रमुख गणमान्यजनै: साकं द्विपक्षीय सहयोग-विषये संवादं समनुष्ठाष्यति इति।

**बिहार विधानसभा**

बिहार विधानसभाया: पंचदिवसीय सत्रं अद्य आरभ्य प्रारभत। इदं सत्रं नवम्बरमासस्य सप्तविंशति दिनांकं यावत् प्रचलिष्यते। राज्ये विधानसभा-निर्वाचनानन्तरं-इदं सत्रं प्रथम: भविष्यति। महामार्य: कारणात् सर्वेषां नवनिर्वाचित-विधायकानां कोविड इत्यस्य परीक्षणं भविष्यति। सत्रावधौ सर्वेभ्य: मुखनासिकाच्छादकं सामाजिकदौर्यस्य परिपालनं वर्तते अतीव आवश्यकम्। कार्यवाहक-विधानसभाध्यक्षेण जीतन राम मांझी इत्यनेन सदस्या: सत्रावधौ सामाजिकदौर्यस्य परिपालनाय निर्दिष्टा: सन्ति। कार्यवाहक-विधानसभाध्यक्ष: अद्य श्व: च सर्वेभ्य: त्रिचत्वारिंशदधिक-द्विशतं नवनिर्वाचित-विधानसभा-सदस्येभ्य: विधानसभासदस्यत्वेन शपथवचनेन प्रतिज्ञापयिष्यते। ऐषम: विधानसभाध्यक्षस्य निर्वाचनं अस्य मासस्य पंचदशे दिनांके भविता। षड्विंशे दिवसे राज्यपाल: संयुक्त सत्रं सम्बोधयिष्यति।

**पीएम-एमपी-फ्लैट**

प्रधानमन्त्रिणा नरेन्द्रमोदिना विश्वास: प्रकटित: यत् अष्टादशी लोकसभा राष्ट्रं आगामि-दशकं प्रापयितुं महत्वपूर्णां भूमिकां निभालयिष्यति अद्य दृश्य श्रव्य-परान्तर्जालीय-माध्यमेन नवदिल्ल्यां प्रधानमन्त्री आवास योजनान्तर्गतं सांसदेभ्यो विनिर्मितानां आवासगृहाणां उद्घाटनावसरे श्रीमोदिना अवादि यत् अभिनव लोकसभा –सत्रावधौ ऐतिहासिका: निर्णया: अभिस्वीकृता:। अपि च गत-लोकसभाऽपेक्षा। अस्यां लोकसभायां अधिकं कार्यं समनुष्ठितम् इति। प्रधानमन्त्रिणा प्रोक्तं यत् राष्ट्रियजनतान्त्रिकसंयुति प्रशासने एतेषां भवनानां शिलान्यासो विहित: आसीत् अपि च निर्धारित-समये एतेषां निर्माणं सम्पन्नतांगतम् इति। तेन प्रोक्तं वर्तमान प्रशासनावधौ केन्द्रीय सूचना आयोगस्य नवनिर्मितं भवनं निर्मितम् अपि च वर्तमान प्रशासनद्वारा एव नैकेषां राष्ट्ररक्षायै हुतिंगतानां वीराणां संस्मृतौ इण्डिया गेट इत्यत्र युद्धस्मारकं विनिर्मितं अस्ति। प्रधानमन्त्रिणा स्पष्टीकृतं यत् कोरोना इति वैश्विक संक्रमण काले अपि संसद: कार्यजातम् अबाधगत्या प्रवर्तितम्। तेन प्रोक्तं नूतन नियमान्तर्गतं ऐतिहासिकै: उपायै: सह उभयो: सदनयो: कार्याणि सम्पादितानि अपि च संसदि प्रत्येकं दलै: साहाय्यम् उपकल्पितम्। श्रीमोदिना लोकसभाध्यक्ष: ओम बिरला: अपि वर्धापित: तेन अवादि यत् षोडशी लोकसभाया:

कार्यकाल: अवसित: अस्मिन्नवधौ राष्ट्रस्य प्रगत्यै विकासाय नैके एतिहासिक निर्णया: स्वीकृता: अपि च सप्तदशी लोकसभा गतवर्षे प्रारब्धा, अस्मिन्नवधौ अपि नैके महत्वपूर्णनिर्णया: स्वीकृता: ये हि राष्ट्रं आगामि दशकं उन्नेतुं महत्वपूर्णभूमिकां आपादयिष्यंति इति।

**राष्ट्रीय कोविड अपडेट**

राष्ट्रं कोरोना इति वैश्विक संक्रमणं विरुध्य अनवरतं सफलतां आप्नोति। पंचाशीति लक्षाधिका: जना: स्वास्थ्यलाभं अवाप्तवन्त: येन हि प्रत्यवाप्तिमिति प्रतिशतं षड्-अष्ट दशमलवोत्तर त्रिनवतिमिता अस्ति संवृत्ता। अवधेयास्पदं वर्तते यत् देशे साम्प्रतं यावत् द्विषष्ठी-सहस्राधिक-पंचाशीतिलक्ष रोगिण: उपचारानन्तरं गृहमुपेता:। विगते अहोरात्रे एकचत्तवारिंशद्-सहस्राधिका: रोगिण: पूर्णरूपेण स्वस्थीभूता:। अपरत: चतुश्चत्तवारिंशद्-सहस्राणि नूतन प्रकरणानि पंजीकृतानि इति। साम्प्रतं देशे प्राय: सार्ध चतुर्-लक्ष-रोगिण: उपचार्यन्ते। स्वास्थ्यमन्त्रालयेन प्रतिपादितम् यत् मृत्युमितौ नैयून्यं आपादितम्। मृत्युमिति: प्रतिशतं चत्वारि-षड्-दशमलवोत्तर एकम् वर्तते। मन्त्रालयेन इदमपि  संसूचितम् यत् विगते अहोरात्रे एकादशाधिक-पंचशतं जना: कालग्रासीभूता:।

**एससी-कोविड-19**

उच्चतम न्यायालयेन दिल्ली-महाराष्ट्र-गुजरात-असम-राज्याणां प्रशासनानि पृष्टानि यत् तानि स्वीय राज्येषु कोविड-19 इति वैश्विक –संक्रमणं अपवारयितुं कान्-कान् उपायान् स्वीकृतवन्त:। न्यायमूर्तिन: अशोकभूषणस्य अध्यक्षतायां विनिर्मितेन पीठेन एतेषु राज्येषु कोरोना-संक्रमणस्य दु:स्थितिमालक्ष्य तत्-तत् राज्याणि तर्जयता विषयेऽस्मिन् समुत्थापित-पदक्षेपविषये भावीकाले स्वीकरिष्यमाण-निर्णयविषये न्यायालयं संसूचयितुं निर्दिष्टानि सन्ति इति। न्यायमूर्तिना अशोकभूषणेन विगते सप्ताहद्वये राष्ट्रिय राजधानीक्षेत्र कोविड नवदश इति वैश्विक संक्रमणस्य स्थितौ चिन्ता प्रकाशिता इति।

**।। इति वार्ता: ।।**